# प्रभु से याचना

त्वं हि नः पिता वसो त्वं माता शतक्रतो बभूविथ।
अधा ते सुम्नमीमहे।
ऋग्वेद 8.98.11



हे सबको आश्रय देनेवाले परमेश्वर, तू ही हमारा पिता है और हे सैकड़ों कर्मों वाले परमेश्वर, तू ही हमारी माता है। (संतानों के लिए देने योग्य) तेरे सुख की हम याचना करते हैं।



सपरिवार

निर्मल अग्रवाल



8/37, पश्चिमी पंजाबी बाग
नई दिल्ली 110026

# कहां क्या?

## वैदिक चिंतन

## अन्य लेखन



## विविध



---

## वेद-सविता

मुद्रक एवं प्रकाशक **प्रद्युम्न शर्मा** द्वारा **वेद-संस्थान** के लिए सी-22, राजौरी गार्डन, नई दिल्ली 110 027 से प्रकाशित एवं ग्राफ़िक वर्ल्ड, 1686, दखनीराय स्ट्रीट, दरियागंज, नई दिल्ली 110 002 से मुद्रित।
संपादक : **देवकृष्ण दाश**।

**फ़ोन :** +91 11 2510 2316, 4559 5005, 8826028505
**ई-मेल** : vedic_science@yahoo.co.in
**URL** : www.veda-sansthan.org
त्रैमासिक पत्रिका। अंक फ़रवरी, मई, अगस्त और नवंबर महीनों में प्रकाशित होते हैं।
एक प्रति का मूल्य : रु 30 (विदेशों में USD 12)
एक वर्ष का शुल्क : रु 100 (विदेशों में USD 40)
तीन वर्षों का शुल्क : रु 250 (विदेशों में USD 100)

## वेद-संस्थान

# महापुरुषः श्रीकृष्णः

## वासुदेवशरणः अग्रवालः

(तस्य 'भारतसावित्री' इति पुस्तके)

अनुवादकः – प्रद्युम्नः शर्मा

मनुष्याणां विचारेषु स्थायिप्रभावं स्थापितेषु भारतीयमहापुरुषेषु श्रीकृष्णस्य स्थानं प्रमुखमस्ति। परःपञ्चसहस्रवर्षाणि पूर्वमेकस्मिन्नेव युगे द्वौ नरावजायेताम्, ययोरुदात्तमस्तिष्कस्य प्रभावोऽस्माकं राष्ट्रियजीवने प्रबलोऽस्ति। संयोगेनोभयोर्नाम कृष्ण इत्येवासीत्। इतिहासलेखका उभयोर्मध्येऽन्तरं दर्शयितुमेकस्मै 'द्वैपायनः कृष्णः' इति नाम्ना प्रयोगं कुर्वन्ति। स वर्तमानसमये 'महर्षिः वेदव्यासः' इति नाम्ना ख्यातः। तस्य मेधयाऽद्वितीयया प्रतिभया चाधुनायावदस्माकं धार्मिकजीवनं मनोविचाराणां प्रत्येकमङ्गञ्च प्रभावितमस्ति।

अपरः कृष्णो देवकीसुतो वासुदेवो बभूव। अद्यत्वे स प्रायः 'कृष्णः' इति मात्रं कथ्यते। बालकृष्णस्य लीलाया मनोहरा गाथाः, तस्य श्रीमद्भगवद्गीतायां महान्त उपदेशाः, महाभारतसङ्ग्रामे च तेन कृतानामार्योचितानां कर्मणां कथा अद्य सर्वगृहेषु प्रचलिताः सन्ति। असंख्यजनानां जीवनान्यद्यापि कृष्णस्यादर्शैः प्रभावितानि वर्तन्ते। परमार्थतोऽस्माकं साहित्यस्यैको विशालांशः कृष्णचरितेनानुप्राणितोऽस्ति। कृष्णचरितस्य घटना न केवलं प्राचीनेतिहासस्य जिज्ञासूनां कृते कुतूहलविषयाः, परन्तु धार्मिकजीवनस्य क्रियाकलापानां नियन्त्रणार्थमद्यापि भारतस्य नभसि शोभायमाना नक्षत्रसमूहा इव प्रकाशन्ते।

### जन्म बालजीवनञ्च

भाद्रपदि मासे कृष्णपक्षेऽष्टम्यां तिथौ, बुधवासरे, रोहिणीनक्षत्रेऽर्धरात्रौ, स्वस्य मातुलस्य (औग्रसेन-कंसस्य) कारागृहे कृष्णो जातः। अनेनैकपक्षेणैव तत्कालिनराजनीतिकचक्रं प्रकाशते। यस्य जन्मभयादेव तस्य मातापित्रोः स्वातन्त्र्यमपहृतमासीत्, स्वाभाविकमिदं यत्तस्य जीवनस्याधिकांशो भागो भारतवर्षस्य राजनीतिकोपद्रवनिवारणे, प्रजायाः क्रूरतायाः शोषणाच्च मुक्तिं प्रापयितुं व्यतीतोऽभवत्।

तत्कालिकैः सर्वैरुच्छृङ्खलैः शोषकैश्च शासकैः सहैकैकशः कृष्णस्य सम्मुखीकरणं बभूव। यो महापुरुषो योग-समाधेरादर्शेण ब्राह्मीस्थितिं प्राप्तुमुपादिशत्, यस्य स्वकीयं जीवनमविचलज्ञाननिष्ठायाः सर्व-श्रेष्ठमुदाहरणमासीत्, कंसवधादारभ्य यादवानां विनाशं यावदत्यन्तकरुणकथा अपि तस्यैव जीवनस्य भागाः बभूवुः।

कृष्णस्य बाल्यकालस्तु काव्यमय एव। तस्य जन्मन एव, अथवा सम्भवतः तत्पूर्वमपि तस्य जीवनेऽलौकिकघटनानां शृङ्खलारब्धाभवत्। वृन्दावनं त्यक्त्वा मथुराऽऽगमनं पर्यन्तं तस्य बाललीलाः गगनयेकत्रमाणानां सुन्दरसुखदमेघमालानामिव विविधवर्णरूपैः सञ्चिता भवन्ति स्म। अकथिता अपि ता वयं जानीमः। अस्माकं देशस्य बालवर्गाय तु तासां कथानां सरससामग्री सुप्रिया वर्तते। यमुनानद्याः समीपस्थेषु गुडफलविटपानामुल्लासमानेषु लतामण्डपेषु कृष्णस्य बालचरितस्य प्रतिध्वनिरद्यापि जीवितकाव्यकथारूपेण प्रतीयते।

अत्रैव स मल्लविद्याभ्यासं कृतवान् यस्मात् कारणात् तेन तदानीं मुष्टिक-चाणूर-प्रभृतयो मल्लाः पराजिताः। यमुनाया अनूपेष्वेवास्माकं संस्कृतेः प्रियवस्तुनोः सङ्गीतनृत्ययोः जन्माऽपि बभूव। तत्रैव गोवंशस्य वृद्धेः प्रतिपालनस्य च परीक्षणानि कृतान्यासन्, येषां पुनरुद्धारोऽस्माकं कृषिप्रधानदेशायाद्यापि प्राप्तव्यादर्शरूपेणास्माकं समक्षे विद्यते।

## राजनीतिकचरितम्

एतेषां बालचरितानां सुखमयीभूमिकोपरान्तं श्रीकृष्ण एकस्मिन् भिन्ने जगति प्रविष्टवान्। वृन्दावनं त्यक्त्वा तस्य मथुराऽऽगमनं तज्जगतः प्रवेशद्वारमिवासीत्। जीवनस्य कष्टसाध्यसत्यानि तस्मै प्रतीक्षमाणान्यासन्। तेन कृतं प्रथमं परिवर्तनं शूरसेनजनपदस्य राजनीताववर्तत। उग्रसेनस्य पुत्रं लोकपीडकं कंसं राज्यच्युतं कृत्वा कृष्णेनोग्रसेनः सिंहासने पुनः प्रतिष्ठापितः।

एतेन कालेन कृष्णस्तस्याग्रजो बलरामश्च किशोरावस्थायां प्रविष्टावास्ताम्। यमुनातटे प्राकृतिकवातावरणे स्वच्छन्दवायुनाऽऽकाशेन च सह बालगोपां मध्ये ताभ्यां जीवनस्य महदुपकल्पनं कृतमेव, किन्तु मस्तिष्कस्य साधनाया अवसरः ताभ्यां तावत्पर्यन्तं न प्राप्त आसीत्। एतस्या अपूर्णताया निवारणाय तौ सान्दीपनिमुनेर्गुरुकुले प्रविष्टावभवताम्। कुलपुरोहितो गर्गाचार्यः, अवन्तीविद्याचार्यश्च सान्दीपनिः, एतयोर्नामद्वययोर्भगवता कृष्णेन सह मधुरसम्बन्धोऽस्ति। निश्चयेन गीताप्रवक्त्रा स्वकीयस्य ज्ञानस्य

प्रथमबीजमार्षज्ञानपरम्परारक्षकैः तपस्विभिर्ब्राह्मणैः प्राप्तमासीत्।

सान्दीपनिमुनिनाध्यापनसमापने श्रीकृष्णे 'सत्यं वद, धर्मञ्चर' इति कथनेन सह प्रेषिते सति परिस्थितिवशात् तस्य (कृष्णस्य) सम्बन्धो हस्तिनापुरस्य राजनीत्या सहाभवत्। वसुदेव उग्रसेनश्च कृष्ण-बलरामौ नीत्वा कुरुक्षेत्रे स्नानाय गतावास्ताम्। कुन्त्यपि तत्राऽऽगतासीत् पाण्डवैः सह। तत्रैव कृष्ण-पाण्डवानां दृढसम्बन्ध आरब्धो जातो यस्मादद्यापि वयं योगेश्वरं कृष्णं धनुर्धरमर्जुनञ्चैकत्र स्मरामः।

कंसवधप्रसङ्गेन कृष्णः स्वकीयस्य राजनीतिकप्रवृत्तेः परिचयं दत्तवानासीत्। हस्तिनापुरस्य राजनीत्या सह सम्पर्केण सा प्रवृत्तिरधिका प्रबलाभवत्। सोऽवागच्छत् यत्तस्मिन् समये भारतभूमिः तेषां राजानां दृढग्रहे बद्धाऽऽसीत् ये प्राचीनप्रजातान्त्रिकपरम्पराणां मानदण्डानां विरुद्धमनियन्त्रितरूपेण राजशक्तेर्दुरुपयोगं कुर्वन्ति स्म। अपि च तस्मात् कारणात् प्रजायामतीव क्षोभः कष्टश्चास्ताम्।

कृष्णस्य बालजीवनं जनसमूहस्याङ्कयेव व्यतीतमासीत्। स यादवजातेरन्धकवृष्णिशाखायाः सदस्य आसीत्। तस्याः शाखायाः शासनं गणराज्यपद्धत्या संचालितमासीत्। अनेन कारणेन तस्य सहानुभूतिः स्वभावतो लोकेन सहाऽऽसीत्। क्रमशः कारणेष्वुपस्थितेषु सत्स्वेकैकेनात्याचारिशासकेन सह तस्य विग्रहा बभूवुः। मागध-राजधान्यां गिरिब्रजे बलिनो जरासन्धस्य वधं कारयित्वा तस्य पुत्रस्य जरासन्धिनः सहदेवस्य राज्याभिषेकमकरोत्। महाभारतकारानुसारं तस्मिन्काले पृथिव्यां जरासन्धस्यातङ्कोऽवर्तत, केवलमन्धकवृष्णयः कुरुवंशीयक्षत्रियाश्च तस्याधीन्यं न स्व्यकुर्वन्। एतौ कुटुम्बौ सम्मिल्य तस्य शासनसमाप्तिं भावयितामासतुः।

चेदिजनपदे शिशुपालस्यानियन्त्रितं शासनमासीत्। स दुर्योधनराजनीतेः समर्थक आसीत्। दुर्योधनशक्तिं निर्बलीकरणाय जरासन्ध-शिशुपालौ घातयित्वा माहिष्मत्याः स्थाने सिंहासने तस्य पुत्रस्य धृष्टकेतोरभिषेकमकारयत्। नग्नजिदः पुत्रान् विजित्य गन्धारदेशमनुकूलमकरोत्। बलिष्ठं पाण्ड्यराजं मल्लयुद्धेन स्ववक्षःस्थलशक्त्याऽमृद्नात्। सौभनगरे शाल्बराजं वश्यकरोत्। सुदूरपूर्वे प्राग्ज्योतिषदुर्गे भौमनरकस्य निरङ्कुशं शासनमासीत्। तेन सहस्रकन्याः स्वकीये कारागृहे निबद्धा इतीयं श्रूयते स्म। तस्य निर्मोचननाम्नि राजधान्यां ससैन्यदलं मुर-नरकौ घातयित्वा कामरूपप्रदेशं मुक्तं कृतवान्। बाणासुरः,

कलिङ्गराजः, काशिराजश्च, एतैः सर्वैः कृष्णेन सह युद्धं कृतमासीत्। ते सर्वे कृष्णस्य बुद्धिकौशलसम्मुखे पराजिता बभूवुः।

कृष्णस्य राजनीतिकतेजः विलक्षणमासीत्। अर्जुनोऽवोचत् यद्युद्धं न कुर्वन्नपि, मनसा कृष्णो यमभिनन्देत्, स एव शत्रुषु विजयी भविष्यति। सोऽघोषयत्, यदि मत्कृते वज्रधारिण इन्द्रस्य कृष्णस्य च मध्ये एक एव चयनीयः स्यात् तर्ह्यहं कृष्णं चिनोम्येव। युगान्तरे आर्यविष्णुगुप्तस्य चाणक्यप्रज्ञायां तथैव विश्वास आसीत्। कृष्णस्य मन्त्रोऽमोघो बभूव। यत्र नान्या युक्तिः प्रवर्तते स्म, तत्र कृष्णयुक्तिः प्रयोज्यासीत्। धृतराष्ट्रस्य धारणाऽऽसीद्यदेकस्मिन् रथे कृष्णार्जुनगाण्डीवधनुष्ष्वेकत्र सत्सु कौरवाणामेकादशाक्षौहिण्याः सेनाया विजयोऽसम्भवो भविष्यति।

महाभारतसङ्ग्रामो भारतीयेतिहासेऽतिदारुणैका घटना। विनाश-कारिण्यस्मिन् सङ्ग्रामे दुर्योधनपक्षे गन्धार-बाल्हीक-कम्बोज-केकय-सिन्धु-मद्र-त्रिगर्त-सारस्वतगण-मालव-अंगादीनां देशानां क्षत्रियाः प्रवृत्ता आसन्। युधिष्ठिरपक्षेऽपि विराट-पञ्चाल-काशि-चेदि-सृञ्जय-वृष्णि- प्रभृतिवंशानां क्षत्रिया युद्धं कर्तुमागतवन्तः। एतादृशं घोरं विनाशं निवारयितुं कृष्णेन यः कश्चन प्रयासः सम्भावितश्चासीत् सोऽत्र कृतः। पाण्डवपक्षतः सर्वाधिकारसम्पन्नः स सन्धिप्रस्तावस्थापनार्थं हस्तिनापुरं गतवान्। तत्र धृतराष्ट्रसभायां तस्य तेजस्विनी वाक्प्रतिध्वनिरद्याप्यितहासे गुञ्जायमानाऽस्ति।

कुरूणां पाण्डवानां च शमः स्यादिति भारत।
अप्रणाशेन वीराणामेतद्याचितुमागतः।।

अर्थात्, कौरवेषु पाण्डवेषु च वीराणां विनाशं विनैव शान्तिः प्रस्थापिता भवेत्, एतदेव प्रार्थितुमहमत्रागतः।

धृतराष्ट्रोऽवोचत्, हे कृष्ण! सर्वमहमवगच्छामि, किन्तु यदि भवान् दुर्योधनमवबोधयितुं शक्नोति, तर्हि प्रयत्नं करोतु। कृष्णस्तदा दुर्योधनमब्रवीत्, 'शमे शर्म भवतात्', अर्थात्, शान्त्यैव तव जगतश्च स्वस्तिः शक्या। सर्वम् श्रुत्वा दुर्योधनोऽघोषयत्,

यावद्धि तीक्ष्णया सूच्या विद्ध्येदग्रेण केशव।
तावदप्यपरित्याज्यं भूमेर्मः पाण्डवान् प्रति।

एष एवापरिहार्ययुद्धस्य संकेत आसीत्। भीष्मद्रोणादयो महात्मानोऽपि दैवेच्छाविरुद्धं जीवितुं न शक्तवन्त आसन्।